ના, સ્વસ્તિવાચન, શાન્તિપાઠ,
સામાન્યપ્રકરણ તથા પુરૂષસૂક્ત સહિત

# ઉપાકર્મ વિધી



પ્રસિદ્ધ કરનાર

મંત્રી, આર્યસમાજ, કાકડવાડી, મુંબઈ.

કિંમત રૂ. ૦-૨-૦

॥ अथ ...तर्गत ॥

## १ ॥ संध्योपासनमंत्राः ॥

ओ३म् । भूर्भुवःस्वः । तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि धियो यो नः प्रचोदयात् ॥ ऋ० मंड० ३ अनु० ५ सू० ६२ मं० १० । य० अ० ३६ मं० ३ ॥ एवं चतुषु वेदेषु समानो मन्त्रः ॥ १ ॥

॥ आचमनमंत्रः ॥

ओं शंनोदेवीरभिष्टय आपोभवन्तुपीतये । शंयोरभिस्रवन्तु नः ॥
यजु० अ० ३६ मं० १२ ॥

ओ३म् वाक् वाक् । ओं प्राणः प्राणः । ओं चक्षुः चक्षुः । ओं श्रोत्रम् । ओं नाभिः । ओं हृदयम् । ओं कण्ठः । ओं । ओं बाहुभ्यां यशोबलम् । ओं करतलकरपृष्ठे ॥

॥ अथेश्वरप्रार्थनापूर्वकमार्जनमंत्राः ॥

ओ३म् भूः पुनातु शिरसि । ओं भुवः पुनातु नेत्रयोः । ओं स्वः पु[illegible] कण्ठे । ओं महः पुनातु हृदये । ओं जनः पुनातु नाभ्याम् । ओं तपः पुनातु पादयोः । ओं सत्यं पुनातु पुनश्शिरसि । ओं खं ब्रह्म पुनातु सर्वत्र ॥

॥ अथ प्राणायाममंत्राः ॥

ओ३म् भूः । ओं भुवः । ओं स्वः । ओं महः । ओं जनः । ओं तपः । ओं सत्यं ॥ तैत्ति० प्रपा० १० अनु० २७ ॥

## ॥ अथाघमर्षणमंत्राः ॥

ओ३म् ऋतञ्चसत्यञ्चाभीद्धात्तपसोऽध्यजायत । ततोरात्र्यजायत ततःसमुद्रोअर्णवः ॥ १ ॥ समुद्रादर्णवादधिसंवत्सरो अजायत । अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥ २ ॥ सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवञ्च पृथिवीञ्चान्तरिक्षमथो स्वः ॥ ३ ॥ ऋ० अ० ८ व० ४८ ॥

## ॥ अथ मनसापरिक्रमामन्त्राः ॥

प्राची दिगग्निरधिपतिरसितो रक्षितादित्या इषवः । तेभ्यो नमोऽधिपतिभ्यो नमो रक्षितृभ्यो नम इषुभ्यो नम एभ्योऽस्तु । योऽस्मान् द्वेष्टि यं वयं द्विष्मस्तं वो जम्भे दध्मः ॥ १ ॥ दक्षिणा-दिगिन्द्रोऽधिपतिस्तिरश्चिराजी रक्षिता पितर इषवः । तेभ्यो नमोऽधिपतिभ्यो नमो रक्षितृभ्यो नम इषुभ्यो नम एभ्योऽस्तु । योऽस्मान्द्वेष्टि यं वयं द्विष्मस्तं वो जम्भे दध्मः ॥ २ ॥ प्रतीची दिग्वरुणोऽधिपतिः पृदाकूरक्षितान्नमिषवः । तेभ्यो नमोऽधिपतिभ्यो नमो रक्षितृभ्यो नम इषुभ्यो नम एभ्योऽस्तु । योऽस्मान् द्वेष्टि यं वयं द्विष्मस्तं वो जम्भे दध्मः ॥ ३ ॥ उदीची दिक्सोमोऽधिपतिः स्वजोरक्षिताशनिरिषवः । तेभ्यो नमोऽधिपतिभ्यो नमो रक्षितृभ्यो नम इषुभ्यो नम एभ्योऽस्तु । योऽस्मान् द्वेष्टि यं वयं द्विष्मस्तं वो जम्भेदध्मः ॥ ४ ॥ ध्रुवा दिग्विष्णुरधिपतिः कल्माषग्रीवो रक्षिता वीरुध इषवः । तेभ्यो नमोऽधिपतिभ्यो नमो रक्षितृभ्यो नम इषुभ्यो नम एभ्योऽस्तु । योऽस्मान् द्वेष्टि यं वयं दिष्मस्तं वो जम्भेदध्मः ॥ ५ ॥ ऊर्ध्वा दिग् बृहस्पतिरधिपतिः श्वित्रोर क्षिता वर्षमिषवः । तेभ्यो नमोऽधिपतिभ्यो नमो रक्षितृभ्यो नम इषुभ्यो

नम एभ्योऽस्तु । योऽस्मान् द्वेष्टि यं वयं द्विष्मस्तं वो जम्भे दध्मः ॥ ६ ॥ अथर्व० कां० ३ । सू० २७ । मं० १ । २ । ३ । ४ । ५ । ६ ॥

ओ३म् उद्वयं तमसस्परि स्वः पश्यन्त उत्तरम् । देवं देवत्रा सूर्य्यमगन्म ज्योतिरुत्तमम् ॥ १ ॥ य० अ० ३५ । मं० १४ ॥

उदुत्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्य्यम् ॥ २ ॥ यजु० अ० ३३ मं० ३१ ॥

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा-द्यावापृथिवी अन्तरीक्षꣳ सूर्य आत्माजगतस्तस्थुषश्च स्वाहा ॥ ३ ॥ य० अ० १३ मं० ४६ ॥

तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ॥ ४ ॥ य० अ० ३६ मं० २४ ॥

॥ अथ गायत्रीमंत्रः ॥

ओ३म् । भूर्भुवःस्वः । तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियो यो नः प्रचोदयात् । ऋ० मं० ३ अनु० ५ सू० ६२ मं० १० । य० अ० ३६ मं० ३ ॥ एवं चतुर्षु वेदेषु समानो मन्त्रः ॥१॥

अथ समर्पणम्

नमः शम्भवाय च मयोभवाय च । नमः शंकराय च मयस्कराय च । नमः शिवाय च शिवतरायच ॥ १ ॥ य० अ० १६ मं० ४१ ।

॥ इति संध्योपासनविधिः ॥

---

१ ओ३म् अमृतोपस्तरणमसि स्वाहा ॥

२ ओ३म् अमृतापिधानमसि स्वाहा ॥

३ ओ३म् सत्यं यशः श्रीर्मयि श्रीःश्रयतां स्वाहा ॥ सौत्रमन्त्राः

આ એક એક મંત્ર વડે એક એક એમ ત્રણ આચમન કરવાં. ત્યાર પછી નિમ્નલિખિત મંત્રો બોલી જલવડે ઇન્દ્રિયસ્પર્શ કરવો—

ओ३म् वाङ् म आस्येऽस्तु ॥ १ ॥

આ મંત્ર વડે મુખ,

ओ३म् नसोर्मे प्राणोऽस्तु ॥ २ ॥

નાસિકાનાં બન્ને છિદ્રો,

ओ३म् अक्ष्णोर्मे चक्षुरस्तु ॥ ३ ॥

બન્ને નેત્ર,

ओ३म् कर्णयोर्मे श्रोत्रमस्तु ॥ ४ ॥

બન્ને કાન,

ओ३म् बाह्वोर्मे बलमस्तु ॥ ५ ॥

બન્ને બાહુ,

ओ३म्ॱऊर्वोर्मे ओजोऽस्तु ॥ ६ ॥

બન્ને જંઘાઓ,

ओ३म् अरिष्टानि मे अङ्गानि तनूस्तन्वा मे सह सन्तु ॥ ७ ॥

---

## ४ ॥ अथेश्वरस्तुतिप्रार्थनोपासनामंत्राः ॥

ओ३म् विश्वानि देव सवितर्दुरितानि परासुव । यद्भद्रंतन्न आसुव ॥ १ ॥ यजु० अ० २० मं० ३.

हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् । स- दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ २ ॥ यजु० अ० १३ मं० ४.

य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः । यस्य च्छायाऽमृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥ ३ ॥ यजु० अ० २५ मं० १३.

यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव । य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥ ४ ॥ यजु० अ० २३ मं ३.

येन द्यौरुग्रा पृथिवी च दृढा येन स्वः स्तभितं येन नाकः । यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ॥ ५ ॥ यजु० अ० ३२ मं० ६.

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वय स्याम पतयो रयीणाम् ॥ ६ ॥ ऋ० मं० १० सू० १२१

स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा । यत्र देवा अमृतमानशानास्तृतीये धामन्नध्यैरयन्त ॥ ७ ॥ यजु० अ० ३२ मं० १०.

अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्य स्मज्जुहुराणमेनो भूयिष्ठान्ते नम उक्तिं विधेम ॥ ८ ॥ य० अ० ४० मं० १६.

॥ इतीश्वरस्तुतिप्रार्थनाप्रकरणम् ॥

---

# ५ ॥ अथ स्वस्तिवाचनम् ॥

अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् होतारं रत्नधातमम् ॥ १ ॥ स नः पितेव सूनवेऽग्ने सूपायनो भव। सचस्वा नः स्वस्तये ॥ २ ॥ ऋ० मं० १ सू० १ ॥

स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना ॥३॥ स्वस्तये वायुमुपब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः। बृहस्पतिं सर्वगणं स्वस्तये स्वस्तय आदित्यासो भवन्तु नः ॥ ४ ॥ विश्वेदेवा नो अद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये। देवा अवन्त्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वंहसः ॥ ५ ॥ स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति। स्वस्ति न इन्द्रश्चाग्निश्च स्वस्तिनो अदिते कृधि ॥ ६ ॥ स्वस्ति पन्थामनुचरेम सूर्याचन्द्रमसाविव। पुनर्ददताघ्नता जानता संगमेमहि ॥ ७ ॥ ऋ० मं० ५ सू० ५१

ये देवानां यज्ञिया यज्ञियानां मनोर्यजत्रा अमृता ऋतज्ञाः। ते नो रासन्तामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः ॥ ८ ॥ ऋ० मं० ७ अ० ३ सू० ३५ ॥

येभ्यो माता मधुमत्पिन्वते पयः पीयूषं द्यौरदितिरद्रिबर्हाः। उक्थशुष्मान् वृषभरान् स्वप्नसस्ताँ आदित्याँ अनुमदा स्वस्तये ॥ ९ ॥ नृचक्षसो अनिमिषन्तो अर्हणा बृहद्देवासो अमृतत्वमानशुः। ज्योतीरथा अहिमाया अनागसो दिवो वर्ष्माणं वसते स्वस्तये ॥ १० ॥ सम्राजो ये सुवृधो यज्ञमाययुरपरिह्वृता दधिरे दिवि क्षयम्। ताँ आ विवास नमसा सुवृक्तिभिर्महो आदित्यां अदितिं स्वस्तये ॥ ११ ॥ को वः स्तोमं राधति यं जुजोषथ विश्वे

देवासो मनुषो यतिष्ठन । को वोऽध्वरं तुविजाता अरं करद्यो नः पर्षदत्यंहः स्वस्तये ॥ १२ ॥ येभ्योहोत्रां प्रथमामायेजे मनुः समि॒ाग्निर्मनसा सप्तहोतृभिः । त आदित्या अभयं शर्म यच्छत सुगा नः कर्त सुपथा स्वस्तये ॥ १३ ॥ य ईशिरे भुवनस्य प्रचेतसो विश्वस्य स्थातुर्जगतश्च मन्तवः । ते नः कृतादकृतादेन-सस्पर्यद्यादेवासः पिपृता स्वस्तये ॥ १४ ॥ भरेष्विन्द्रं सुहवं हवा-महेऽहोमुचं सुकृतं दैव्यं जनम् । अग्निं मित्रं वरुणं सातये भगं द्यावा पृथिवी मरुतः स्वस्तये ॥ १५ ॥ सुत्रामाणं पृथिवीं द्याम-नेहसं सुशर्माणमदितिं सुप्रणीतिम् । दवीं नावं स्वरित्रामनागसम-स्रवन्तीमा रुहेमा स्वस्तये ॥ १६ ॥ विश्वे यजत्रा अधि ओचतोतये त्रायध्वं नो दुरेवाया अभिन्हुतः सत्यया वो देवहूत्या हुवेम शृण्वतो देवा अवसे स्वस्तये ॥ १७ ॥ अपामीवामप विश्वामना-हुतिमपारातिं दुर्विदत्रामघायतः । आरे देवा द्वेषो अस्मद्युयोतनो-रुणः शर्म यच्छता स्वस्तये ॥ १८ ॥ अरिष्टः स मर्त्तो विश्व एधते प्रप्रजाभिर्जायते धर्मणस्परि । यमादित्यासो नयथा सुनीतिभिरति विश्वानि दुरिता स्वस्तये ॥ १९ ॥ यं देवासोऽवथ वाजसातौ य शूरसाता मरुतो हि ते धने । प्रातर्यावाणं रथमिन्द्र सानसिमरि-ष्यन्तमा रुहेमा स्वस्तये ॥ २० ॥ स्वस्ति नः पथ्यासु धन्वसु स्वस्त्य ३ प्सुवृजनेस्वर्वति । स्वस्ति नः पुत्रकृथेषु योनिषु स्वस्ति राये मरुतो दधातन ॥ २१ ॥ स्वस्ति रिद्धि प्रपथे श्रेष्ठा रेक्ण स्वस्त्यभि या वाममेति सा नो अमासो अरणे निपातु स्वावेशा भवतु देवगोपाः ॥ २२ ॥ ऋ० मं० १० सू० ६३.

इषे त्वोर्ज्जे त्वा वायव स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्न्या इन्द्राय भागं प्रजावतीरनमीवा अयक्ष्मा

मा वस्तेन ईशत माघश छं सो ध्रुवा अस्मिन् गोपतौ स्यात बह्वीर्यजमानस्य पशून् पाहि ॥ २३ ॥ यजु० अ० १ मं० १ ॥

आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासोअपरीतास उद्भिदः । देवा नो यथासदमिद्वृधेअसन्नप्रायुवो रक्षितारो दिवेदिवे ॥ २४ ॥ देवानां भद्रा सु मतिर्ऋजूयतां देवाना॑ँ रातिरभि नो निवर्त्तताम् । देवाना॑ँ सख्यमुपसेदिमा वयं देवा न आयुः प्रतिरन्तु जीवसे ॥ २५ ॥ तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम् । पूषा नो यथा वेदसामसद्वृधेरक्षिता पायुरदब्धः स्वस्तये ॥ २६ ॥ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पति-र्दधातु ॥ २७ ॥ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः स्थिरैरङ्गैस्तुष्टुवा॑ँ सस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ २८ ॥ यजु० अ० २५ मं० १४।१५।१८।१९।२१॥

अग्न आयाहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषि ॥ २९ ॥ त्वमग्ने यज्ञाना॑ँ होता विश्वेषा॑ँ हितः । देवेभिर्मानुषे जने ॥ ३० ॥ सा० छन्द आ० प्रपा० १ मं० १।२॥

ये त्रिषप्ताः परियन्ति विश्वा रूपाणि बिभ्रतः । वाचस्पतिर्बला तेषां तन्वो अद्य दधातु मे ॥ ३१ ॥ अथर्व० कां० १ । वर्ग १ । अनु० १ । प्रपा० १ मं० १ ॥

॥ इति स्वस्तिवाचनम् ॥

# ६ ॥ अथ शान्तिप्रकरणम् ॥

शन्न इन्द्राग्नी भवता मवोभिः शन्न इन्द्रावरुणा । रातहव्या ॥ शमिन्द्रासोमा सुविताय शंयोः शन्न इन्द्रापूषणा वाजसातौ ॥ १ ॥ शन्नो भगः शमु नः शंसो अस्तु शन्नः पुरन्धिः शमु सन्तु रायः । शन्नः सत्यस्य सुयमस्य शंसः शन्नो अर्यमा पुरुजातो अस्तु ॥ २ ॥ शन्नो धाता शमु धर्त्ता नो अस्तु शन्न उरुची भवतु स्व धामिः । शं रोदसी बृहती शं नो अद्रि शं नो देवानां सुहवानि सन्तु ॥३॥ शन्नो अग्निर्ज्योतिरनीको अस्तु शन्नो मित्रावरुणावश्विना शम् । शन्नः सुकृतां सुकृतानि सन्तु शन्न इषिरो अभिवातु वातः ॥४॥ शन्नो द्यावापृथिवी पूर्वहूतौ शमन्तरिक्षं दृशये नो अस्तु । शं न ओषधीर्वनिनो भवन्तु शन्नो रजसस्पतिरस्तु जिष्णुः ॥ ५ ॥ शन्न इन्द्रो वसुभिर्देवो अस्तु शमादित्येभिर्वरुणः सुशंसः । शन्नो रुद्रो रुद्रेभिर्जलाषः शन्नस्त्वष्टा ग्नाभिरिह शृणोतु ॥ ६ ॥ शं नः सोमो भवतु ब्रह्म श नः शं नो ग्रावाणः शमु सन्तु यज्ञाः । शं नः स्वरूणां मितयो भवन्तु शं नः प्रस्वः ? शम्वस्तु वेदिः ॥७॥ शं नः सूर्य उरुचक्षा उदेतु शं नश्चतस्रः प्रदिशो भवन्तुं । शं नः पर्वता ध्रुवयो भवन्तु शं नः सिन्धवः शमु सन्त्वापः ॥८॥ शं नो अदितिर्भवतु व्रतेभिः शं नो भवन्तु मरुतः स्वर्काः । शं नो विष्णुः शमु पूषा नो अस्तु शं नो भवित्रं शम्वस्तु वायुः ॥९॥ शं नो देवः सविता त्रायमाणः शं नो भवन्तूषसो विभातीः । शं नः पर्जन्यो भवतु प्रजाभ्यः शं नः क्षेत्रस्य पतिरस्तु शम्भुः ॥ १० ॥ शं नो देवा विश्वदेवा भवन्तु शं सरस्वती सह धीभिरस्तु । शमभिषाचः शमु रातिषाचः शं नो दिव्याः पार्थिवाः शन्नो अप्याः ॥ ११ ॥ शं नः सत्यस्य

पतयो भवन्तु शं नो अर्वन्तः शमु सन्तु गावः । शं नः ऋभवः सुकृतः सुहस्ताः शं नो भवन्तु पितरो हवेषु ॥ १२ ॥ शं नो अज एकपाद्देवो अस्तु शं नोऽहिर्बुध्न्यः शं समुद्रः शं नो अपां नपात्पेरुरस्तु शं नः पृश्निर्भवतु देवगोपाः ॥ १३ ॥ ऋ० मं० ७ सू० ३५ मं० १–१३ ॥

इन्द्रो विश्वस्य राजति शंनोऽस्तु द्विपदे शं चतुष्पदे ॥ १४ ॥ शन्नो वातः पवताꣳ शं नस्तपतु सूर्यः । शं नः कनिक्रदद्देवः पर्जन्योऽअभिवर्षतु ॥ १५ ॥ अहानि शं भवन्तुः नः शꣳरात्रीः प्रतिधीयताम् । शं न इन्द्राग्नी भवतामवोभिः शं न इन्द्रा वरुणा रातहव्या । शं न इन्द्रापूषणा वाजसातौ शमिन्द्रासोमा सुविताय शंयोः ॥ १६ ॥ शंनो देवीरभिष्टय आपो भवन्तु पीतये । शंयोरभिस्रवन्तु नः ॥ १७ ॥ द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्वꣳशान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥ १८ ॥ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ॥ १९ ॥

यजु० अ० ३६ मं० ८।१०।११।१२।१७।२४॥

यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति । दूरंगमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसंकल्पमस्तु ॥ २० ॥ येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः । यदपूर्वं यक्षमन्तः प्रजानां तन्मे मनः शिवसंकल्पमस्तु ॥ २१ ॥ यत्प्रज्ञानमुत चेतो

धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु । यस्मान्नऋते किंचन कर्म क्रियते तन्मे मनः शिवसंकल्पमस्तु ॥ २२ ॥ येनेदं भूतं भुवनं भविष्यत्परिगृहीतममृतेन सर्वम् । येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसंकल्पमस्तु ॥ २३ ॥ यस्मिन्नृचः साम यजूꣳषि यस्मिन् प्रतिष्ठिता रथनाभाविवाराः । यस्मिंश्चित्तꣳसर्वमोतं प्रजानां तन्मे मनः शिवसंकल्पमस्तु ॥ २४ ॥ सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन इव । हृत्प्रतिष्ठं यदजिरं जविष्ठं तन्मे मनः शिवसंकल्पमस्तु ॥ २५ ॥ यजु० अ० ३४ मं० १–६

स नः पवस्व शङ्गवे शं जनाय शमर्वते । शꣳराजन्नोषधीभ्यः ॥ २० ॥ साम० उत्त० अ० प्रपा० १ मं० १ ॥

अभयं नः करत्यन्तरिक्षमभयं द्यावापृथिवी उभे इमे । अभयं पश्चादभयं पुरस्तादुत्तरादधरादभयं नो अस्तु ॥ २७ ॥ अभयं मित्रादभयममीत्रादभयं ज्ञातादभयं परोक्षात् । अभयं नक्तमभयं दिवा नः सर्वा आशा मम मित्रं भवन्तु ॥ २८ ॥ अथर्व० कां० १९ । सू० १५ मं० ५।६ ॥

॥ इतिशान्तिप्रकरणम् ॥

---

## ७ ॥ सामान्य होम प्रकरणम् ॥

### ओ३म् भूर्भुवः स्वः

ओ३म् भूर्भुवः स्वर्द्यौरिव भूम्ना पृथिवीव वरिम्णा । तस्यास्ते पृथिवी देवयजनि पृष्ठेऽग्निमन्नादमन्नाद्यायादधे ॥ यजुर्वेद० अ० ३ मं० ५

ओ३म् उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते सꣳसृजेथा मयं च। अस्मिन्त्सधस्थे अध्युत्तरस्मिन् विश्वेदेवा यजमानश्च सीदत ॥ यजु० अ० १५ मं० ५४

ओ३म् अयन्त इध्म आत्मा जातवेदस्तेनेध्यस्ववर्धस्व चेद्ध वर्धय चास्मान् प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा–इदमग्नये जातवेदसे–इदन्न मम ॥ सौत्रमन्त्रः ॥

ओ३म् समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् आस्मिन् हव्या जुहोतन स्वाहा। इदमग्नये–इदन्न मम ॥ यजु० अ० ३ मं० १.

ओ३म् सुसमिद्धाय शोचिषे घृतं तीव्रं जुहोतन। अग्नये जातवेदसे स्वाहा ॥ इदमग्नये जातवेदसे–इदन्न मम ॥ यजु० अ० ३ मं० २

ओ३म् तन्त्वा समिद्भिरङ्गिरो घृतेन वर्द्धयामसि। बृहच्छोचा यविष्ठ्य स्वाहा ॥ इदमग्नयेऽङ्गिरसे, इदन्न मम ॥ यजु० अ० ३ मं० ३

ओ३म् अयन्त इध्म आत्मा जातवेदस्तेनेध्यस्व वर्द्धस्व चेद्ध वर्द्धय चास्मान्प्रजयापशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा ॥ इदमग्नये जातवेदसे–इदन्न मम ॥ सौत्रमन्त्रः।

१ ओ३म् अदितेऽनुमन्यस्व ॥ પૂર્વમાં.

२ ओ३म् अनुमतेऽनुमन्यस्व ॥ પશ્ચિમમાં.

३ ओ३म् सरस्वत्यनुमन्यस्व ॥ ઉત્તરમાં.

४ ओ३म् देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय। दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाचं नः स्वदतु ॥ यजु० अ० ३० मं० १ દક્ષિણમાં

१ ओ३म् अग्नये स्वाहा ॥ इदमग्नये—इदन्न मम ॥ यजु० अ० २२ मं० २७

२ ओ३म् सोमाय स्वाहा ॥ इदं सोमाय—इदन्न मम । य० अ० २२ मं० २७

३ ओ३म् प्रजापतये स्वाहा ॥ इदं प्रजापतये—इदन्न मम ॥ य० अ० १८ मं० २८

४ ओ३म् इन्द्राय स्वाहा ॥ इदमिन्द्राय—इदन्न मम ॥ य० अ० २२ मं० २७

१ ओ३म् भूरग्नये स्वाहा ॥ इमग्नये—इदन्न मम ॥
२ ओ३म् भुवर्वायवे स्वाहा ॥ इदं वायवे—इदन्न मम ॥
३ ओ३म् स्वरादित्याय स्वाहा ॥ इदमादित्याय—इदन्न मम ॥
४ ओ३म् भूर्भुवः स्वरग्निवाय्वादित्यभ्यः स्वाहा ॥
इदमग्नि वाय्वादित्येभ्यः—इदन्न मम ॥

---

॥ ओ३म् ॥

## अथ उपाकर्मविधिः ( श्रावणी )

१ ओ३म् प्रजापतये स्वाहा ॥ इदं प्रजापतये इदन्न मम ॥
२ ओ३म् इन्द्राय स्वाहा ॥ इदं इन्द्राय इदन्न मम ॥
३ ओ३म् अग्नये स्वाहा ॥ इदमग्नये इदन्न मम ॥
४ ओ३म् सोमाय स्वाहा ॥ इदं सोमाय इदन्न मम ॥
५ ओ३म् पृथिव्यै स्वाहा ॥ इदं पृथिव्यै इदन्न मम ॥
६ ओ३म् अग्नये स्वाहा ॥ इदमग्नये इदन्न मम ॥

७ ओ३म् ब्रह्मणे स्वाहा ॥ इदं ब्रह्मणे इदन्न मम ॥
८ ओ३म् छन्दोभ्यः स्वाहा ॥ इदं छन्दोभ्य इदन्न मम ॥
९ ओ३म् अन्तरिक्षाय स्वाहा ॥ इदमन्तरिक्षाय इदन्न मम ॥
१० ओ३म् वायवे स्वाहा ॥ इदं वायवे इदन्न मम ॥
११ ओ३म् ब्रह्मणे स्वाहा ॥ इदं ब्रह्मणे इदन्न मम ॥
१२ ओ३म् छन्दोभ्यः स्वाहा ॥ इदं छन्दोभ्य इदन्न मम ॥
१३ ओ३म् दिवे स्वाहा ॥ इदं दिवे इदन्न मम ॥
१४ ओ३म् सूर्याय स्वाहा ॥ इदं सूर्याय इदन्नमम ॥
१५ ओ३म् ब्रह्मणे स्वाहा ॥ इदं ब्रह्मणे इदन्न मम ॥
१६ ओ३म् छन्दोभ्यः स्वाहा ॥ इदं छन्दोभ्य इदन्न मम ॥
१७ ओ३म् दिग्भ्यः स्वाहा ॥ इदं दिग्भ्य इदन्न मम ॥
१८ ओ३म् चन्द्रमसे स्वाहा ॥ इदं चन्द्रमसे इदन्न मम ॥
१९ ओ३म् ब्रह्मणे स्वाहा ॥ इदं ब्रह्मणे इदन्न मम ॥
२० ओ३म् छन्दोभ्यः स्वाहा ॥ इदं छन्दोभ्य इदन्न मम ॥
२१ ओ३म् प्रजापतये स्वाहा ॥ इदं प्रजापतये इदन्न मम ॥
२२ ओ३म् देवेभ्यः स्वाहा ॥ इदं देवेभ्य इदन्न मम ॥
२३ ओ३म् ऋषिभ्यः स्वाहा ॥ इदं ऋषिभ्य इदन्न मम ॥
२४ ओ३म् श्रद्धायै स्वाहा ॥ इदं श्रद्धायै इदन्न मम ॥
२५ ओ३म् मेधायै स्वाहा ॥ इदं मेधायै इदन्न मम ॥
२६ ओ३म् सदसस्पतये स्वाहा ॥ इदं सदसस्पतये इदन्न मम ॥
२७ ओ३म् अनुमतये स्वाहा ॥ इदमनुमतये इदन्न मम ॥

ओ३म् सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। सभूमिꣳ सर्व्वतस्पृत्वाऽत्यतिष्ठद्दशाङ्गुलम् स्वाहा ॥

ओ३म् पुरुषएवेदꣳ सर्व्वं यद्भूतं यच्च भव्यम्। उतामृतत्व-स्येशानो यदन्नेनातिरोहति स्वाहा ॥

ओ३म् एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि स्वाहा ॥

ओ३म् त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः। ततो विष्वङ व्यक्रामत्साशनानशने अभि स्वाहा ॥

ओ३म् ततो विराडजायत विराजो अधिपूरुषः। सजातो अत्य-रिच्यत पश्चाद्भूमिमथोपुरः स्वाहा ॥

ओ३म् तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम्। पशूँस्ताँश्चक्रे वायव्या नारण्या ग्राम्याश्चये स्वाहा ॥

ओ३म् तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे। छन्दाꣳसि जज्ञिरे तस्माद्यजुस्तस्मादजायत स्वाहा ॥

ओ३म् तस्मादश्वा अजायन्त ये केचोभयादतः गावोह जज्ञिरे तस्मात्तस्माज्जाता अजावयः स्वाहा ॥

ओ३म् तं यज्ञं बर्हिषिप्रौक्षन्पुरुषं जातमग्रतः। तेन देवा अजयन्त साध्या ऋषयश्चये स्वाहा ॥

ओ३म् यत्पुरुषं व्यदधुः कतिधः व्यकल्पयन्। मुखं किमस्या-सीत् किं बाहू किमूरू पादा उच्येते स्वाहा ॥

ओ३म् ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः। ऊरूतदस्य यद्वैश्यः पद्भ्याꣳ शूद्रो अजायत स्वाहा ॥

ओ३म् चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत । श्रोत्राद्वा-युश्च प्राणाश्च मुखादग्निरजायत स्वाहा ॥

ओ३म् नाभ्या आसीदन्तरिक्षं शीर्ष्णोद्यौः समवर्त्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ २ अकल्पयन् स्वाहा ॥

ओ३म् यत्पुरुषेण हविषा देवा यज्ञमतन्वत । वसन्तोऽस्यासी-दाज्यं ग्रीष्म इध्मः शरद्धविः स्वाहा ॥

ओ३म् सप्तास्यासन्परिधयस्त्रिसप्त समिधः कृताः । देवा यद्य-ज्ञं॰ तन्वाना अबध्नन्पुरुषं पशुम् स्वाहा ॥

ओ३म् यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । तेह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः स्वाहा ॥

ओ३म् अद्भ्यः सम्भृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्त्त-ताग्रे । तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे स्वाहा ॥

ओ३म् वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय स्वाहा ॥

ओ३म् प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते । तस्य योनिं परिपश्यन्ति धीरास्तस्मिन् ह तस्थुर्भुवनानि विश्वाः स्वाहा ॥

ओ३म् यो देवेभ्य आतपति यो देवानां पुरोहितः । पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये स्वाहा ॥

ओ३म् रुचं ब्राह्मं जनयन्तो देवा अग्रे तदब्रुवन् । यस्त्वैवं ब्राह्मणो विद्यात्तस्य देवा असन्वशे स्वाहा ॥

ओ३म् श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणाऽमुं म इषाण सर्वलोकं म इषाण स्वाहा ॥

ओ३म् अग्ने व्रतपते व्रतं चरिष्यामि तत्ते प्रब्रवीमितच्छकेयम्। तेनर्ध्यासमिदमहमनृतात्सत्यमुपैमि स्वाहा ॥ इदमग्नये—इदन्न मम ॥

ओ३म् वायो व्रतपते व्रतं चरिष्यामि तत्ते प्रब्रवीमितच्छकेयम्। तेनर्ध्यासमिदमहमनृतात्सत्यमुपैमि स्वाहा ॥ इदं वायवे-इदन्न मम ॥

ओ३म् सूर्य व्रतपते व्रतं चरिष्यामि तत्ते प्रब्रवीमितच्छकेयम्। तेनर्ध्यासमिदमहमनृतात्सत्यमुपैमि स्वाहा ॥ इदं सूर्याय—इदन्न मम ॥

ओ३म् चन्द्र व्रतपते व्रतं चरिष्यामि तत्ते प्रब्रवीमितच्छकेयम्। तेनर्ध्यासमिदमहमनृतात्सत्यमुपैमि स्वाहा ॥ इदं चन्द्राय—इदन्न मम ॥

ओ३म् व्रतानां व्रतपते व्रतं चरिष्यामि तत्ते प्रब्रवीमितच्छकेयम्। तेनर्ध्यासमिदमहमनृतात्सत्यमुपैमि स्वाहा ॥ इदमिन्द्राय—व्रतपतये—इदन्न मम ॥

ओ३म् यां मेधां देवगणाः पितरश्चोपासते। तया मामद्यमेधयाऽग्ने मेधाविनं कुरु स्वाहा ॥

ओ३म् मेधां मे वरुणो ददातु मेधामग्निः प्रजापतिः मेधामिन्द्रश्च वायुश्च मेधां धाता ददातु मे ॥ स्वाहा ॥

તત્પશ્ચાત્ સૌએ પોતપોતાના આસનપર બેસી શાન્ત ચિત્તે નિમ્ન મંત્રનો પાઠ કરી નવીન યજ્ઞોપવીત ધારણ કરવું તથા જુના યજ્ઞોપવીતને શરીરના નીચેના ભાગથી ત્યાગી દેવું.

**ओ३म् यज्ञोपवीतं परमं पवित्रम् प्रजापतेर्यत्सहजं पुरस्तात् आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः। यज्ञोपवीत-मसियज्ञस्त्वा यज्ञोपवीते नोपनह्यामि ॥**

**અર્થ**:—જે પ્રજાપતિ પરમાત્માનું સચ્ચિદાનંદ સ્વરૂપ પરમપવિત્ર યજ્ઞમાં સત્કૃત છે તેની પ્રાર્થના કરી, આ યજ્ઞોપવીત ( જનોઇ ) તે પૂજનીય પરમાત્માની ભક્તિ તથા યજ્ઞનું અનુષ્ઠાન કરવાને માટે ધારણ કરૂં છું. તે યજ્ઞોપવીત ઇશ્વરાનુગ્રહવડે દીર્ઘાયુ, શ્રેષ્ઠ ગુણ, બલ તથા તેજનું દાતા થાઓ.

યજ્ઞોપવીત ધારણ કર્યા બાદ "**ओ३म् आ ब्रह्मन् ब्राह्मणो**" એ મંત્રથી શાન્તિપાઠ કરવો.

**ओ३म् सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम्। सनिं मेधा-मयासिषꣳ स्वाहा। इदं सदसस्पतये इदन्न मम ॥**

યજમાને ઉદુમ્બર ( ઉમરડા ) ની ત્રણ સમિધાઓ લઈ ઉભા થવું ને પૂર્વાભિમુખ કરી **ગાયત્રી** મંત્રદ્વારા ત્રણે સમિધાની આહુતિઓ યજ્ઞકુંડમાં આપવી.

તત્પશ્ચાત્ ઉપસ્થિત સ્ત્રીપુરૂષોએ ભાતની ધાણીના ત્રણ ત્રણ દાણા હાથમાં રાખી એક એક દાણો નિમ્ન મંત્ર બોલી ત્રણે દાણા ચાવ્યા વગર ગળી જવા.

**ओ३म् शंनो भवन्तु वाजिनो हवेषु देवता तामितद्रवः स्वर्काः जम्भयन्तोहि वृकं रक्षांसि सनेम्यस्मद्युयवन्नमीवाः ॥**

તત્પશ્ચાત્ નિમ્ન મંત્રદ્વારા દધિનું ( દહીંનું ) ભક્ષણ કરવું.

**ओ३म् दधिक्राव्णोऽकारिषञ्जिष्णो रश्वस्यवाजिनः सुरभिनोमु-खाकरत्प्रण आयू षि तारिषत् ॥**

ઉપરોક્ત મંત્રથી દધિ ભક્ષણ કરી શુદ્ધ જળના બે આચમનો કરવાં ત્યારબાદ **ગાયત્રી મંત્રદ્વારા** તલની ત્રણ આહુતિઓ આપવી.

**ओ३म् शान्तिः शान्तिः शान्तिः ॥**

---

ओ३म् यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्नि-ष्टत्स्विष्टकृद्विद्यात्सर्वंस्विष्टं सुहुतं करोतु मे । अग्नये स्विष्टकृते सुहुतहुते सर्वप्रायश्चित्ताहुतीनां कामानां समर्धयित्रे सर्वान्नः कामान् समर्द्धय स्वाहा ॥ इदमग्नये स्विष्टकृते—इदन्न मम ॥ शत० ब्रा० कां० १४ अ० ८ प्र० ७ कं० ५

સ્વિષ્ટકૃત આહુતિ આપ્યા પછી નિમ્નલિખિત મંત્ર વડે પ્રાજાપત્યાહુતિ આપવી. આ આહુતિ મંત્ર મનમાં બોલીને આપવીઃ—

ओ३म् प्रजापतये स्वाहा ॥ इदं प्रजापतये इदन्न मम ॥

હે સર્વપૂજ્ય પરમાત્મન્ ! અમારાં કર્ત્તવ્યકર્મમાં કાંઈ વ્યંગતા કે વિશેષતા હશે તે આપ જાણો છો; આપ અમારા હાથે સર્વ ઇષ્ટ કર્મો કરાવો તથા આપની ભક્તિ, પરોપકાર તથા ધર્મવૃદ્ધિ આદિ અમારી મનોકામનાઓ પૂર્ણ થાઓ.

સૃષ્ટિકર્તા પરમાત્માને માટે આ આહુતિ આપું છું.

આ આહુતિ આપ્યા પછી ચૌલ, સમાવર્તન તથા વિવાહસંસ્કારમાં નિમ્નલિખિત મંત્રો વડે ચાર ઘૃતાહુતિ આપવીઃ—

१ ओ३म् भूर्भुवः स्वः । अग्न आयूंषि पवस आसुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनां स्वाहा । इदमग्नये पवमानाय, इदन्न मम ॥ ऋ० मं० ९ सू० ६६ मं० १९

२ ओ३म् भूर्भुवः स्वः । अग्निऋषिः पवमानः । पाञ्चजन्यः पुरोहितः । तमीमहे महागयं स्वाहा । इदमग्नये पवमानाय, इदन्न मम ॥ ऋ० मं० ९ सू० ६६ मं० २०

३ ओ३म् भूर्भुवः स्वः । अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधद्रयिं मयि पोषं स्वाहा । इदमग्नये पवमानाय, इदन्न मम ॥ ऋ० मं० ९ सू० ६६ मं० २१

४ ओ३म् भूर्भुवः स्वः । प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतया रयीणां स्वाहा । इदं प्रजापतये, इदन्न मम । ऋ० मं० १० सू० १२१ मं० १०

( **अग्न आयूंषि** ) હે સર્વપાલક પૂજ્ય પરમાત્મા ! અમારા જીવિતવનું રક્ષણ કર તથા અમને ઉત્તમ અન્ન, બલ તથા વિજ્ઞાન આપ; અને દુષ્ટોનો નાશ કર.

( **अग्निऋषि०** ) હે મહાજનસ્તુત સર્વદ્રષ્ટા, સર્વપાલક ઇશ્વર ! તું અમારૂં હિત કરનાર છે, અમે તારી પ્રાર્થના કરીએ છીએ કે તું અમને વિપુલ ધન તથા સન્તતિ આપ.

( **अग्ने पवस्व०** ) હે શોભન પરમાત્મન્ ! અમને ઉત્તમ તેજ, ધન, પુષ્ટિ, તથા આરોગ્ય આપો.

( **प्रजापते न०** ) આ મંત્રનો અર્થ ઇશ્વિરસ્તુતિ પ્રાર્થનામાં આપવામાં આવ્યો છે.

આ ચાર મંત્રો વડે ધૃતની ચાર આહુતિ આપીને નિમ્નલિખિત મંત્રો વડે "અષ્ટાજ્યાહુતિઃ" સર્વે મંગલકાર્યોમાં આપવી, પરન્તુ કયા સંસ્કારમાં કયે વખતે આપવી તેનું સ્પષ્ટીકરણ તે તે સંસ્કારોમાં કરવામાં આવશેઃ—

१ ओ३म् त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेडो अवयासिसीष्ठाः । यजिष्ठो वन्हितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत् स्वाहा ॥ इदमग्निवरुणाभ्याम्, इदन्न मम ॥ १ ॥ ऋ० मं० ४ सू० १ मं० ४

२ ओ३म् सत्वन्नोऽअग्नेऽवमो भवोती नेदिष्ठो अस्या उपसो व्युष्टौ । अवयक्ष्वनो वरुणं रराणो वीहि मृळीकं सुहवो न एधि स्वाहा ॥ इदमग्नीवरुणाभ्याम्, इदन्न मम ॥ ऋ० मं० सू० १ मं० ५

३ ओ३म् इमं मे वरुण श्रुधी हवमद्या च मृळय । त्वामवस्यु-राचके स्वाहा ।। इदं वरुणाय, इदन्न मम । ऋ० मं० १ सू० २५ मं० १९

४ ओ३म् तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः स्वाहा । इदंव रुणाय, इदन्न मम ।। ऋ० मं० १ सू० २४ मं० ११

५ ओ३म् ये ते शतं वरुणं ये सहस्रं यज्ञियाः पाशा वितता महान्तः ।। तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा ।। इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्याः स्वर्केभ्यः । इदन्न मम ।। सौत्रमन्त्रः ।।

६ ओ३म् अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्यमित्त्वमयासि । अयानो यज्ञं वहास्यया नो धेहि भेषजꣳ स्वाहा इदमग्नये अयसे-इदन्न मम ।। सौत्रमन्त्रः ।।

७ ओ३म् उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमं श्रथाय । अथा वयमादित्यव्रते तवानागसोऽदितये स्याम स्वाहा ।। इदं वरुणायाऽदित्यायाऽदितये च इदन्न मम ।। ऋ० मं० १ सू० २४ मं० १५

८ ओ३म् भवतन्नः समनसौ सचेतसावरेपसौ । मायज्ञꣳहिꣳ-सिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः स्वाहा । इदं जातवेदोभ्यां-इदन्न मम यजु० अ० ५ मं० ३

ओ३म् पूर्णादर्वि परा पत सुपूर्णा पुनरापत । वस्नेव विक्रीणा-वहाऽइषमूर्जꣳ शतक्रतो ।। स्वाहा ।।

ઉપર્યુક્ત આહુતિઓ આપી રહ્યા બાદ જે કાંઈ યજ્ઞસામગ્રી શેષ રહી હોય તેના ત્રણ ભાગ કરી એક એક ભાગ નીચેનો મંત્ર એકેક વાર બોલી યજ્ઞકુંડમાં હોમી દેવી.

**ओ३म् सर्वं वै पूर्णं स्वाहा ॥**

ત્યાર બાદ બાકી રહેલા ઘીને પાત્રમાં ભરી નીચેના મંત્ર વડે અખંડ ધારાથી યજ્ઞકર્તાઓએ ઉભા થઇને યજ્ઞકુંડમાં હોમી દેવું.

**ओ३म् वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्र-धारम् । देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः ॥**

ત્યાર બાદ નીચેના મંત્રો વડે, યજ્ઞકર્તા તથા પ્રેક્ષકોએ ઉભા થઈ શાન્ત ચિત્તે પ્રાર્થના કરવી.

**ओ३म् द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्वꣳ शान्तिः शान्तिरेव शान्तिः सामा शान्तिरेधि ॥**

**ओ३म् आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायताम् । आ राष्ट्रे राजन्यः शूर इषव्योऽतिव्याधि महारथो जायताम् । दोग्ध्री धेनुर्वोढा-नड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायताम् । निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम्**

**ओ३म् शान्तिः शान्तिः शान्तिः ॥**

---

# આરતી.

જય જગદીશ હરે. પિતા જય જગદીશ હરે.
ભકત જનોંકે સંકટ ( ૨ ) ક્ષણુમેં દુર કરે. ઓમ્ જય.
જો ધ્યાવે ફળ પાવે. દુઃખ વિણુસે મનકા.-પ્રભુ. ( ૨ )
સુખ સંપતિ ઘર આવે (૨) કષ્ટ મિટે તનકા. ઓમ્ જય.
માત પિતા તુમ મેરે. શરણ ગ્રહુ કિશકી.-પ્રભુ. ( ૨ )
તુમ બીન ઓર ન કોઈ (૨) આશ કરૂં કિશકી. ઓમ્ જય.
તુમ પૂરણ પરમાત્મા તુમ અંતરયામી-પ્રભુ. ( ૨ )
પરમ બ્રહ્મ પરમેશ્વર (૨) તુમ સબકે સ્વામિ ઓમ્ જય.
તુમ કરૂણા કે સાગર તુમ પાલન કર્તા.-પ્રભુ. ( ૨ )
મૈં મૂરખ અજ્ઞાની ( ૨ ) કૃપા કરો ભર્તા. ઓમ્ જય.
તુમહો એક અગોચર સબકે પ્રાણપતિ.-પ્રભુ. ( ૨ )
કિસ વિધ મિલુ દયામય (૨) તુમકો મેં કુમતિ ઓમ્ જય.
દીન બંધુ દુઃખ હર્તા તુમ રક્ષક મેરે.-પ્રભુ. ( ૨ )
કરૂણા હસ્ત બઢાવો ( ૨ ) શરણ પડા તેરે. ઓમ્ જય.
વિષયવિકાર મિટાઓ પાપ હરો દેવા-પ્રભુ. ( ૨ )
શ્રદ્ધા ભકિત બઢાઓ ( ૨ ) સંતનકી સેવા. ઓમ્ જય.

ओ३म् शान्तिः शान्तिः शान्तिः

## ओ३म्.

# આર્યસમાજના નિયમ.



૧. સર્વ સત્યવિદ્યા અને જે પદાર્થ વિદ્યાથી જાણવામાં સર્વનું આદિ મૂળ પરમેશ્વર છે.

૨. ઈશ્વર સચ્ચિદાનંદસ્વરૂપ, નિરાકાર, સર્વશક્તિમાન, ન્યા અજન્મા, અનન્ત, નિર્વિકાર, અનાદિ, અનુપમ, સર્વાધાર, ર વ્યાપક, સર્વાન્તર્યામી, અજર, અમર, અભય, નિત્ય, પવિત્ર છે: એનીજ ઉપાસના કરવી યોગ્ય છે.

૩. વેદ સત્ય વિદ્યાઓનું પુસ્તક છે. વેદ ભણવા ભણાવવા સંભળાવવા એ સર્વ આર્યોનો પરમ ધર્મ છે.

૪. સત્ય ગ્રહણ કરવામાં અને અસત્ય છોડવામાં સર્વદા ઉદ્યત જોઈએ.

૫. સર્વ કામ ધર્માનુસાર અર્થાત્ સત્ય અને અસત્યનો વિચાર કરવું જોઇએ.

૬. સંસારનો ઉપકાર કરવો અર્થાત્ શારીરિક, આત્મિક અને સામા ઉન્નતિ કરવી, એ આ સમાજનો મુખ્ય ઉદ્દેશ છે.

૭. સર્વ સાથે પ્રીતિપૂર્વક, ધર્માનુસાર યથાયોગ્ય વર્તવું જોઇએ

૮. અવિદ્યાનો નાશ અને વિદ્યાની વૃદ્ધિ કરવી જોઇએ.

૯. પ્રત્યેકે પોતાની ઉન્નતિથી સંતુષ્ટ ન રહેવું જોઇએ ઉન્નતિમાં પોતાની ઉન્નતિ સમજવી જોઇએ.

૧૦. સર્વ મનુષ્યોએ સામાજીક સર્વહિતકારી નિયમ પાળ રહેવું જોઇએ. અને પોતપોતાના હિતકારી નિયમમાંજ સ્વતંત્ર

મુદ્રક—એમ. એન. કુળકર્ણી, કર્નાટક પ્રેસ, ઠાકુરદ્વાર.